॥२०५।८, ४५/-

अथ

# पातञ्जल योगदर्शनम् ।

## व्यास कृत भाष्य सहितम्



मञ्जीठा नगरवासी सरदार उमारावसिंह वर्म्मा
मुद्रापितवांश्छास्त्रं विरजानन्द मुद्रणालये ।

सहितंव्यासभाष्येण प्रणीतमञ्जलीयता
प्रयास:सफलस्तस्य विदुषाम्भवतान्मुदे ।

आर्य्यसम्वत् १९६०८५२९९३



लवपुरे

१९४९ वि०

१००० प्रति मूल्य ।)

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

॥ ओ३म् ॥

# अथ पातञ्जलयोगसूत्रम् ॥

## व्यासकृतभाष्यसहितम् ॥

---

अथ योगानुशासनम् ॥ १ ॥

अथेत्ययमधिकारार्थः । योगानुशासनं नाम शास्त्रमधिकृतं वेदितव्यम् । योगः समाधिः । स च सार्वभौमः चित्तस्य धर्मः । क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः । तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते । यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति प्रक्षिणोति च क्लेशान् कर्मबंधनानि श्लथयति निरोधमभिमुखं करोति स संप्रज्ञातो योग इत्याख्यायते । स च वितर्कानुगतो विचारानुगत आनंदानुगतो ऽस्मितानुगत इत्युपरिष्टात् प्रवेदयिष्यामः । सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः समाधिः । तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते ॥ १ ॥

योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

सर्वशब्दाग्रहणात् सम्प्रज्ञातो ऽपि योग इत्याख्यायते । चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणं । प्रख्यारूपं हि चित्तसत्वं । रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति । तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति । तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति । तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्व-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

पुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति । तत्परं प्रसंख्यानमित्याचक्षते ध्यायिनः । चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च सत्वगुणात्मिका चेयम् । विपरीता विवेकख्यातिरिति । अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि । तदवस्थं संस्कारोपगं भवति । स निर्बीजः * समाधिः । न तत्र किंचित्सम्प्रज्ञायत इत्यसम्प्रज्ञातः । द्विविधः स योगश्चित्तवृत्तिनिरोध इति । तदवस्थे चेतसि विषयाभावाद्बुद्धिबोधात्मा पुरुषः किं स्वभाव इति ॥ २ ॥

## तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये । व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा । कथं तर्हि । दर्शितविषयत्वात् ॥ ३ ॥

## वृत्तिसारूप्यमितरत्र ॥ ४ ॥

व्युत्थाने याः चित्तवृत्तयः । तदविशिष्टवृत्तिः पुरुषः । तथा च सूत्रम्—"एकमेव दर्शनमिति" । चित्तमयस्कांतमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः । तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिः सम्बन्धो हेतुः । ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य ॥ ४ ॥

## वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥

क्लेशहेतुकाः कर्माशयप्रचये क्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः । क्लिष्टप्रवाहपतिता अप्य-

---

* निर्विकल्पः पाठान्तरे ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्लिष्टाः क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति । अक्लिष्टच्छिद्रेषु क्लिष्टा इति । तथा जातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते । संस्कारैश्च वृत्तय इति । एवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते । तदेवं भूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते । प्रलयं वा गच्छतीति । ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः ॥ ५ ॥

## प्रमाण विपर्यय विकल्प निद्रा स्मृतयः ॥ ६ ॥

## तत्र प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥

इन्द्रियप्रणालिकया चित्तस्य वाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनो ऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् । फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः । बुद्धेः प्रति संवेदी पुरुष इत्युपरिष्टादुपपादयिष्यामः । अनुमेयस्य तुल्यजातीयेषुनिवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यस्तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानं । यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकञ्चैत्रवत् । विन्ध्यश्चाप्राप्तिरगतिः । आप्तेन दृष्टो ऽनुमितो वार्थः परत्रस्वबोधसंक्रांतये शब्देनोपदिश्यते । शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः । यस्य अश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते । मूलवक्तरि तु दृष्टानुमितार्थो निर्विप्लवः स्यात् ॥

## विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

स कस्मान्न प्रमाणं । यतः प्रमाणेन वाध्यते । भूतार्थविषयत्वात्प्रमाणस्य । तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम् । तद्यथा द्विचन्द्रदर्शनं । सद्विषयेनैकचन्द्रदर्शनेन बाध्यत इति । सेयं पञ्चपर्वा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भवत्यविद्या । अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा इति । एत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इत्येते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

स न प्रमाणोपारोही। न विपर्ययोपारोही च। वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति। यदा चितिरेव पुरुषः तदा किमत्र केन व्यपदिश्यते। भवति च व्यपदेशे वृत्तिः। यथा चैत्रस्य गौरिति। तथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः। तिष्ठति वाणः स्थास्यति स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं गम्यते। तथानुत्पत्तिधर्मा पुरुष इति। उत्पत्तिधर्मस्याभावमात्रमवगम्यते। न पुरुषान्वयी धर्मः। तस्माद्विकल्पितः। स धर्मस्तेन चास्ति व्यवहार इति ॥ ९ ॥

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥**

सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः। कथं सुखमहमस्वाप्सम्। प्रसन्नं मे मनः। प्रज्ञां मे विशारदी करोति। दुःखमहमस्वाप्सम्। स्त्यानं मे मनो। भ्रमत्यनवस्थितं गाढं। मूढोऽहमस्वाप्सम्। गुरूणि मे गात्राणि। क्लान्तं मे चित्तम्। अलसं मुषितमिव तिष्ठतीति। स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात्। असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युः। तस्मात्प्रत्ययविशेषो निद्रा। सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥

**अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥**

किं प्रत्ययस्य चित्तं स्मरति आहोस्वित् विषयस्येति। ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः। तथा जातीयकं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

संस्कारमारभते । स संस्कारः स्वव्यञ्जकाञ्जनः । तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिञ्जनयति । तत्र ग्रहणाकारपूर्वा बुद्धिः । ग्राह्याकारपूर्वा स्मृतिः । सा च द्वयी । भावितस्मर्तव्या चाभावितस्मर्तव्या च । स्वप्ने भावितस्मर्तव्या । जाग्रत्समये त्वभावितस्मर्तव्येति । सर्वाः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात् प्रभवन्ति । सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः । सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः । सुखानुशयी रागः । दुःखानुशयी द्वेषः । मोहः पुनरविद्येति । एताः सर्वा वृत्तयो निरोद्धव्याः । आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवति । असम्प्रज्ञातो वेति । अथासां निरोधे क उपाय इति ॥ ११ ॥

अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

चित्तनदी नामोभयतो वाहिनी । वहति कल्याणाय । वहति पापाय च । या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा । संसारप्राग्भाराविवेकविषयनिम्ना पापवहा । तत्र वैराग्येण विषयस्रोतः खिली क्रियते । विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते । इत्युभयाधीनश्चित्तवृत्तिनिरोधः ॥ १२ ॥

तत्र स्थितौ यत्नो ऽभ्यासः ॥ १३ ॥

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः । तदर्थः प्रयत्नो वीर्यमुत्साहः । तत्सम्पिपादयिषया तत्साधनानुष्ठानमभ्यासः ॥ १३ ॥

स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः ॥ १४ ॥

दीर्घकालासेवितः निरन्तरासेवितः । तपसा, ब्रह्मचर्येण,

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

विद्यया, श्रद्धया च सम्पादितः सत्कारवान् दृढभूमिर्भवति। व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥ १४ ॥

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

स्त्रियो ऽन्नपानमैश्वर्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसंयोगे ऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलादनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

तत्परम्पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुष दर्शनाभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो ऽव्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति तत् द्वयं वैराग्यम्। तत्र यदुत्तरं तज् ज्ञानप्रसादमात्रम्। यस्योदये प्रत्युदितख्यातिरेवं मन्यते। प्राप्तं प्रापणीयम्। क्षीणाः क्षेतव्याः। क्लेशाः छिन्नाः। श्लिष्टपर्वा भवसंक्रमो यस्याविच्छेदात् जनित्वा म्रियते मृत्वा च जायत इति। ज्ञानस्यैव पराकाष्ठा वैराग्यम्। एतस्यैव हि नांतरीयकं कैवल्यमिति। अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यतं संप्रज्ञातः समाधिरिति ॥ १६ ॥

वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः ॥ १७ ॥

वितर्कः चित्तस्यालम्बने स्थूल आभोगः। सूक्ष्मो विचारः। आनन्दो ल्हादः। एकात्मिका संविदस्मिता। तत्र प्रथम चतुष्टयानु-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गतः समाधिः सवितर्कः । द्वितीयो वितर्कविकलः सविचारः । तृतीयो विचारविकलः सानन्दः । चतुर्थस्तद्विकलः अस्मिता मात्र इति । सर्व एते सालम्बनाः समाधयः । अथासंप्रज्ञातसमाधिः किमुपायः किं स्वभावो वेति ॥ १७ ॥

विरामप्रत्ययाभ्यासपूर्वः* संस्कारशेषोऽन्यः ॥ १८ ॥

सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः। तस्य परं वैराग्यमुपायः । सालंबनो ह्यभ्यासस्तत्साधनाय न कल्प्यत इति । विरामप्रत्ययो निर्वस्तुक आलंबनो क्रियते। स चार्थशून्यः । यदभ्यासपूर्वं चित्तं निरालंवनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसम्प्रज्ञातः । स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च। तत्रोपायप्रत्ययो योगिनां भवति ॥१८॥

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

विदेहानां देवानां भवप्रत्ययः । ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति । तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति। यावन्न पुनरावर्त्तते अधिकारवशाच्चित्तमिति ॥ १९ ॥

श्रद्धा वीर्य स्मृति समाधि प्रज्ञा पूर्वक इतरेषाम् ॥ २० ॥

उपायप्रत्ययो योगिनां भवति। श्रद्धा चेतसः सम्प्रसादः । सापि जननीव कल्याणी योगिनं पाति। तस्य श्रद्दधानस्य विवेकार्थिनो

---

* "पूर्वकः" पाठान्तरे

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

वीर्यमुपजायते । समुपजातवीर्यस्य स्मृतिरुपतिष्ठते । स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते । समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते । येन यथावद्वस्तु जानाति । तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति । ते खलु नव योगिनो—मृदुमध्याधिमात्रोपाया भवन्ति । तद्यथा मृदुपायो मध्योपायो ऽधिमात्रोपायानाम् ॥ २० ॥

तीव्रसंवेगानामासन्नः ॥ २१ ॥

य इति तत्र मृदूपायो ऽपि त्रिविधो—मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति । तथा मध्योपायस्तथाधिमात्रोपाय इति । तत्राधिमात्रोपायात्समाधिलाभः समाधिफलं च भवतीति ॥ २१ ॥

मृदुमध्याधिमात्रत्वात् ततो ऽपि विशेषः ॥ २२ ॥

मृदुतीव्रो, मध्यतीव्रो ऽधिमात्रतीव्र इति ततो ऽपि विशेषः ॥ तद्विशेषान्मृदुतीव्रसंवेगस्यासन्नः । ततो मध्यतीव्रवेगस्यासन्नतरः । तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्याप्यासन्नतमः समाधिलाभः समाधिफलं चेति ॥ २२ ॥

किमेतस्मादेवासन्नतमः समाधिर्भवति । अथास्यालाभे भवतिः अन्यो ऽपि कश्चिदुपायो न वेति ॥

ईश्वरप्रणिधानाद्वा ॥ २३ ॥

प्रणिधानाद्भक्तिविशेषादावर्त्तित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण । तदभिध्यानादपि योगिन आसन्नतरः समाधिलाभः फलं च भवतीति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः को ऽयमीश्वरो नामेति ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत् फलं विपाकस्तदनुगुणा वासना आशयास्ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते । स हि तत्फलस्य भोक्तेति, यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः । कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः । ते हि त्रीणि बन्धनानि छित्वा कैवल्यं प्राप्ताः । ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी, यथा मुक्तस्य पूर्वाबन्धकोटिः प्रज्ञायते नैवमीश्वरस्य, यथा वा प्रकृतिलीनस्योत्तराबन्धकोटिः सम्भाव्यते नैवमीश्वरस्य, स तु सदैव मुक्तः सदैवेश्वर इति । योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्त आहोस्विन्निर्निमित्त इति ? तस्य शास्त्रं निमित्तं । शास्त्रं पुनः किं निमित्तं ? प्रकृष्टसत्त्वनिमित्तम् । एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्त्तमानयोरनादिसंबन्धः । एतस्मादेतद्भवति, सदैवेश्वरः सदैव मुक्त इति । तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम् । न तावदैश्वर्यान्तरेण तदतिशय्यते । यदेवातिशयी स्यात्तदेव तत्स्यात् । तस्माद्यत्र काष्ठा प्राप्तिरैश्वर्यस्य स ईश्वरः । न च तत्समानमैश्वर्यमस्ति । कस्मात् द्वयोस्तुल्ययोरेकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु, पुराणमिदमस्त्विति एकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं । द्वयोश्च तुल्ययोर्युगपत् कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात् । तस्माद्यस्य साम्यातिशयविनिर्मुक्तमैश्वर्यं स ईश्वरः, स च पुरुष विशेष इति ॥ २४ ॥ किंच—

तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजमेतद्धि वर्द्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठा प्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात्परिमाणवदिति। यत्र काष्ठा प्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुष विशेष इति। सामान्य मात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति। तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या। तस्यात्मानुग्रहाभावेपि भूतानुग्रहः प्रयोजनं, ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति। तथा चोक्तम्—

"आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति" ॥ २५ ॥

स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥२६॥

पूर्वे हि गुरवः कालेनावच्छिद्यन्ते। यत्रावच्छेदार्थेन कालो नोपावर्त्तते स एष पूर्वेषामपि गुरुः। यथास्य सर्गस्यादौ प्रकर्षगत्या सिद्धः तथातिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥ २६ ॥

तस्य वाचकः प्रणवः ॥ २७ ॥

वाच्य ईश्वरः प्रणवस्य। किमस्य संकेतकृतं, वाच्यवाचकत्वं, अथ प्रदीपप्रकाशवदवस्थितमिति? स्थितोऽस्यवाच्यस्य वाचकेन सहसंबन्धः। संकेतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति, यथावस्थितः पितापुत्रयोः संबन्धः सङ्केतेनावद्योत्यते, अयमस्य पिता, अयमस्य पुत्र इति। सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते। सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानीते, विज्ञातवाच्यवाचकत्वस्य योगिनः ॥ २७ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## तज्जपस्तदर्थभावनम् ॥ २८ ॥

प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावना। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं सम्पद्यते, तथा चोक्तम्—

"स्वाध्यायाद्योगमासीत् योगात् स्वाध्यायमामनेत्।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते" इति ॥ २८ ॥

किं चास्य भवति ॥

## ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च २९

ये तावदन्तरायाः व्याधिप्रभृतयस्ते तावदीश्वरप्रणिधानान्न भवन्ति। स्वरूपदर्शनमप्यस्य भवति, यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलः अनुपसर्गः तथायमपि बुद्धेः प्रतिसंवेदीयः पुरुष इत्येवमधिगच्छति। अथ केऽन्तरायाः? ये चित्तस्य विक्षेपकाः के पुनस्ते कियन्तो वेति? ॥ २९ ॥

## व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रांतिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥

नवान्तरायाश्चित्तस्य विक्षेपाः। सहैते चित्तवृत्तिभिर्भवन्त्येतेषामभावे न भवन्ति। पूर्वोक्ताश्चित्तवृत्तयः, व्याधिर्धातुरसकरणवैषम्यं, स्त्यानमकर्मण्यता चित्तस्य, संशय उभयकोटिस्पृक् विज्ञानं, स्यादिदं एवं नैवं स्यादिति, प्रमादः समाधिसाधनानामभावनं, आलस्यङ्कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः, अविरतिश्चित्तस्य विषयसम्प्रयोगात्मा गर्द्धः, भ्रान्तिदर्शनं विपर्ययज्ञानं,

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

अलब्धभूमिकत्वं समाधिभूमेरलाभः, अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा, समाधिप्रतिलम्भे हि सति तदवस्थितं स्यादिति । एते चित्तविक्षेपा नवयोगमला: योगप्रतिपक्षा योगान्तराया इत्यभिधीयन्ते ॥ ३० ॥

दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेप-सहभुवः ॥ ३१ ॥

दुःखमाध्यात्मिकं, आधिभौतिकं, आधिदैविकं च । येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद्दुःखं, दौर्मनस्यं इच्छाभिघाताच्चेतसः क्षोभः, यदङ्गान्येजयति कंपयति तदङ्गमेजयत्वं, प्राणो यद्वाह्यं वायुमाचामति स श्वासः, यत्कौष्ठ्यं वायुं निस्सारयति स प्रश्वासः । एते विक्षेपसहभुवो, विक्षिप्तचित्तस्यैते भवन्ति । समाहितचित्तस्यैते न भवन्ति ॥ ३१ ॥

अथैते विक्षेपाः समाधिप्रतिपक्षास्ते ऽभ्यासवैराग्याभ्यां निरोद्धव्याः । तत्राभ्यासस्य विषयमुपसंहरन्निदमाह—

तत् प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥

विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं चित्तमभ्यसेत् । यस्य तु प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकं चित्तन्तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तं । यदि पुनरिदं सर्वतः प्रत्याहृत्य एकस्मिन्नर्थे समाधीयते तदाभवत्यैकाग्रमित्यतो न प्रत्यर्थनियतं । यो ऽपि सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं मन्यते तस्यैकाग्रता यदि प्रवाहचित्तस्य धर्मः तदैकं नास्ति प्रवाहचित्तं क्षणिकत्वात । अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा ? प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्त-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

चित्तानुपपत्तिः । तस्मादेकमनेकार्थमवस्थितं चित्तमिति । यदि च चित्ते नैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन्, अथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत् । अन्यप्रत्ययोपचितस्य कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत्, कथंचित्समाधीयमानमप्येतद्गोमयपायसीयं न्यायमाक्षिपति । किंच स्वात्मानुभवापह्नवः । चित्तस्यान्यत्वे प्राप्नोति । कथं यदहमद्राक्षं तत्स्पृशामि, यच्चास्प्राक्षन्तत्पश्यामीति, अहमिति प्रत्ययः, कथमत्यन्तभिन्नेषु चित्तेषु वर्त्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत स्वानुभवग्राह्यश्चायमभेदात्मा, अहमिति प्रत्ययः, न च प्रत्यक्षस्य माहात्म्यम्प्रमाणांतरेणाभिभूयते । प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते । तस्मादेकमनेकार्थमवस्थितं च चित्तम् । यस्येदं शास्त्रेण परिकर्म निर्दिश्यते तत्कथम् ॥ ३२ ॥

## मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

तत्र सर्वप्राणिषु सुखसंभोगापन्नेषु मैत्रीं भावयेत्, दुःखितेषु करुणां, पुण्यात्मकेषु मुदितां, अपुण्यशीलेषूपेक्षां, एवमस्य भावयतः शुक्लो धर्म उपजायते । ततश्च चित्तम्प्रसीदति । प्रसन्नमेकाग्रस्थितपदं लभते ॥ ३३ ॥

## प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

कौष्ठ्यस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद्वमनं, प्रच्छर्दनं विधारणं प्राणायामः । ताभ्यां वा मनसः स्थितिं संपादयेत् ॥ ३४ ॥

## विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी ॥ ३५ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित्सा गन्धप्रवृत्तिः, जिह्वाग्रे रससंवित्, तालुनि रूपसंवित्, जिह्वामध्ये स्पर्शसंवित्, जिह्वामूले शब्दसंवित्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति। संशयं विधमन्ति समाधिप्रज्ञायां च द्वारीभवन्तीति। एतेन चन्द्रादित्यग्रहमणिप्रदीपरत्नादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तच्छास्त्रानुमानाचार्योपदेशैरवगतमर्थतत्वं सद्भूतमेव भवति, एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात्तथापि यावदेकदेशोऽपि कश्चित् न स्वकरणसंवेद्यो भवति तावत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति। तस्माच्छास्त्रानुमानाचार्योपदेशोपोद्बलनार्थमेवावश्यम्। कश्चिद्विशेष प्रत्यक्षी कर्तव्यः। तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं सुसूक्ष्मविषयमप्यापवर्गात् श्रद्धीयते। एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते। अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति। तथा च सति श्रद्धावीर्यस्मृतिसमाधयः, अस्याः प्रतिबन्धेन भविष्यन्तीति ॥३५॥

## विशोका वा ज्योतिष्मती ॥ ३६ ॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते। हृदयपुण्डरीके धारयतो या बुद्धिसंवित् (बुद्धिसत्वं हि भास्वरमाकाशकल्पं तत्र स्थितिवैशारद्यात्) प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते। तथास्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति। यत्रेदमुक्तं—तमणुमात्रमात्मानमनुविद्यास्मीति—एवं तावत्सम्प्रजानीते, इत्येषा द्वयोर्विशोका विषयवती, अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते, यया योगिनश्चित्तं स्थितिपदं लभते ॥ ३६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३७ ॥

स्वप्नज्ञानालम्बनं निद्राज्ञानालम्बनं वा, तदाकारं योगिनश्चित्तं स्थितिपदं लभते ॥ ३७ ॥

यथाभिमतध्यानाद्वा ॥ ३८ ॥

यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभते ॥ ३८ ॥

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ३९ ॥

सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति । स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्यैवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतिघातः स परो वशीकारः । तद्वशीकारात् परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ३९ ॥

अथ लब्धस्थितिकस्य चेतसः किं स्वरूपा, किं विषया वा समापत्तिरिति तदुच्यते ।

क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४० ॥

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः । अभिजातस्येव मणेरिति दृष्टान्तोपादानं, यथा स्फटिक उपाश्रयभेदात् तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते, तथा ग्राह्यालम्बनोपरक्तश्चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते । भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्य स्वरूपाभासं भवति । तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति । तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भवति। तथा ग्रहणेष्वपीन्द्रियेष्वपि द्रष्टव्यं, ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते । तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते । तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासते । तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते ॥ ४० ॥

**तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ ४१ ॥**

तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टं । विभज्यमानाश्चान्ये शब्दधर्मा, अन्येऽर्थधर्मा, अन्ये विज्ञानधर्मा, इत्येतेषां विभक्तः पन्थास्तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दज्ञानविकल्पानुविद्ध उपावर्त्तते, सा संकीर्णा समापत्तिः सवितर्केत्युच्यते । यदा पुनः शब्दसंकेतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते, सा च निर्वितर्का समापत्तिः । तत्परम्प्रत्यक्षं तच्च श्रुतानुमानयोर्बीजम् । ततः श्रुतानुमाने प्रभवतः न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनं । तस्मादसंकीर्णं प्रमाणांतरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति ॥ ४१ ॥

निर्वितर्कायाः समापत्तेरस्याः सूत्रे लक्षणं द्योत्यते ।

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४२ ॥**

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

या शब्दसंकेतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति, सा निर्वितर्का समापत्तिः। तथा च व्याख्यातं। तस्या एकबुध्युपक्रमो ह्यर्थात्माणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः, स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः, फलेन व्यक्तेनानुमितः, स्वव्यञ्जकाञ्जनः प्रादुर्भवति। धर्मान्तरोदयश्च तिरो भवति। स एष धर्मोऽवयवीत्युच्यते। योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्चानित्यश्च तेनावयविना व्यवहाराः क्रियन्ते। यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यमतस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति, प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति। तदा च सम्यग्ज्ञानमपि किं स्याद् विषयाभावात् यद्यदुपलभ्यते तत्तदवयवित्वेनाघ्रातं तस्मादस्त्यवयवी, यो महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयो भवति ॥ ४३ ॥

## एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥

तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते। एवं स्वरूपं हि तद्भूतसूक्ष्मं। एतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति प्रज्ञा च स्वरूपशून्येवा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

र्थमात्रा यदा भवति, तदा निर्विचारेत्युच्यते । तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च सूक्ष्मविषया सविचारा निर्विचारा च । एवमुभयोरेतयैव निर्वितर्कायां विकल्पहानिर्व्याख्यातेति ॥ ४४ ॥

## सूक्ष्मविषयत्वञ्चालिङ्गपर्य्यवसानम् ॥ ४५ ॥

पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रमाकाशस्य शब्दतन्मात्रमिति, तेषामहंकारः । अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः, लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः, न चालिङ्गात्परं सूक्ष्ममस्ति । नन्वस्ति पुरुषः सूक्ष्म इति । सत्यं, यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यम् । न चैवं पुरुषस्य किन्तु लिङ्गस्यान्वयीकारणं पुरुषो न भवति । हेतुस्तु भवतीति । अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

## ता एव सबीजः समाधिः ॥ ४६ ॥

ताश्चतस्रः समापत्तयः बहिर्वस्तु बीजा इति समाधिरपि सबीजः । तत्र स्थूले ऽर्थे सवितर्को निर्वितर्कः सूक्ष्मे ऽर्थे सविचारो निर्विचार इति चतुर्धोपसंख्यातः समाधिरिति ॥ ४६ ॥

## निर्विचारवैशारद्ये ऽध्यात्मप्रसादः ॥ ४७ ॥

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते, तदा योगिनो भवति अध्यात्मप्रसादः, भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः । तथा चोक्तम्—

प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञो ऽनुपश्यति ॥ ४७ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

तस्मिन्समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति। अन्वर्था च सा सत्यमेव बिभर्ति न तत्र विपर्य्यासज्ञानगन्धोऽप्यस्ति। तथा चोक्तम्—

आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥ ४८ ॥ सा पुनः

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ४९

श्रुतमागमविज्ञानन्तत्सामान्यविषयन्न ह्यागमेन शक्यो विशेषोऽभिधातुं, कस्मान्नहि विशेषेण कृतसंकेतः शब्द इति। तथानुमानं सामान्यविषयमेव यत्र प्राप्तिस्तत्र गतिः, यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम्—अनुमानेन च सामान्येनोपसंहारः। तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति। न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणम्। न चास्य विशेषस्याप्रमाणकस्याभावोऽस्तीति, समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति। भूतसूक्ष्मगतो वा पुरुषगतो वा। तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वादिति । समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते ॥ ४९ ॥

तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

समाधिप्रज्ञाभवः संस्कारो व्युत्थानसंस्काराशयम्बाधते। व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति । प्रत्ययनिरोधे समाधिरुपतिष्ठते। ततः समाधिजा प्रज्ञा,ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्कारशयो जायते, ततः प्रज्ञा, ततश्च संस्कारा इति।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कथमसौ संस्कारातिशयश्चित्तं साधिकारन्न करिष्यतीति। न ते प्रज्ञाकृताः संस्काराः क्लेशक्षये हेतुत्वात् चित्तमधिकारविशिष्टं कुर्वन्ति। चित्तं हि ते स्वकार्यादवसादयन्ति। ख्यातिपर्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥ किञ्चास्य भवति ?

## तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ५१

स न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्मान्निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति। निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्। व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते। तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति। यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते। तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठः। अतः शुद्धो मुक्त इत्युच्यते ॥ ५१ ॥

इति पातञ्जले योगशास्त्रे व्यासकृतभाष्ये च समाधिपादः प्रथमः ॥ १ ॥

---

उद्दिष्टः समाहितचित्तस्य योगः कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते ॥

## तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥१॥

नातपस्विनो योगः सिध्यति। अनादिकर्मक्लेशवासना*विशयप्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेदमापद्यते

* चित्रप्रत्युपस्थित०

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

इति तपस उपादानम्। तच्च चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते। स्वाध्यायो प्रणवादिपवित्राणाञ्जपो मोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणं, तत् फलसंन्यासो वा॥ १॥

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

स हि क्रियायोग आसेव्यमानः समाधिम्भावयति, क्लेशांश्च प्रतनूकरोति। प्रतनूकृतान् क्लेशान् प्रसंख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति। तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २॥ अथ के क्लेशाः कियन्तो वेति—

**अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः ॥ ३ ॥**

क्लेशा इति पञ्च विपर्य्यया इत्यर्थः। ते स्पन्दमाना* गुणाधिकारं द्रढयन्ति, परिणाममवस्थापयन्ति, कार्य्यकारणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्री भूत्वा कर्मविपाकं चाभिनिर्हरन्ति ॥ ३॥

**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥**

अत्राविद्या क्षेत्रं प्रसवभूमिरुत्तरेषामस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः? चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः। तस्य प्रबोध आलम्बने संमुखी-

---

* स्पन्दमाना।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भावः प्रसंख्यानवतो दग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्ब-
नेनासौ पुनरस्ति दग्धबीजस्य कुतः प्ररोह इति । अतः क्षीणक्लेशः
कुशलश्चरमदेह इत्युच्यते । तत्रैव सा दग्धबीजभावा पञ्चमी
क्लेशावस्था नान्यत्रेति । सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति
विषयस्य संमुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता
प्रसुप्तिर्दग्धबीजानामप्ररोहश्च तनुत्वमुच्यते । प्रतिपक्षभावनोपहताः
क्लेशास्तनवो भवन्ति । तथा विच्छिद्य २ तेन तेनात्मना पुनः २ समुदा-
चरन्तीति । विच्छिन्नाः कथं रागकाले क्रोधस्यादर्शनात् । न हि
रागकाले क्रोधः समुदाचरति, रागश्च क्वचिद्दृश्यमानो न विषया-
न्तरे नास्ति । नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्तः,
किन्तु तत्र रागो लब्धवृत्तिः अन्यत्र भविष्यद्वृत्तिरिति । स हि तदा
प्रसुप्ततनुविच्छिन्नो भवति । विषये यो लब्धवृत्तिः स उदारः सर्व
एवैते क्लेशविषयत्वं नातिक्रामन्ति । कस्तर्हि विच्छिन्नः प्रसुप्तत-
नुरुदारो वा क्लेश इति उच्यते । सत्यमेवैतत् किन्तु विशिष्टानामेवै-
तेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्व-
व्यञ्जकाञ्जनेनाभिव्यक्त इति, सर्व एवामी क्लेशा अविद्याभेदा
कस्मात्सर्वेषु अविद्यैवाभिप्लवते । यदविद्यया वस्त्वाकार्यते तदेवा-
नुशेरते क्लेशविपर्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणाञ्चावि-
द्यामनुक्षीयन्त इति ॥ ४ ॥ तत्राविद्यास्वरूपमुच्यते ।

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्म-
ख्यातिरविद्या ॥ ५ ॥**

अनित्ये कार्ये नित्यख्यातिः । तद्यथा ध्रुवा पृथिवी, ध्रुवा सचन्द्र
तारका द्यौः, अमृता दिवौकस इति । तथा शुचौ परमबीभत्से काये
शुचिख्यातिः । उक्तञ्च—

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्थानाद्बीजादुपष्टम्भान्निः स्यन्दान्निधनादपि।
कायमाधेय शौचत्वात् पण्डिता ह्यशुचिं विदुः॥

इत्यशुचौ शुचिख्यातिर्दृश्यते। नवेव शशाङ्कलेखा, कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रम्भित्वा निः सृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्याञ्जीवलोकमाश्वासयन्तीवेति कस्य केनाभिसम्बन्धः, भवति चैवमशुचौ शुचिविपर्यास प्रत्यय इति। एतेनापुण्ये पुण्यप्रत्ययस्तथैवानर्थे चार्थप्रत्ययो व्याख्यातः। तद्यथा दुःखे सुखख्यातिं वक्ष्यति। परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन इति। तत्र सुखख्यातिरविद्या तथा अनात्मन्यात्मख्यातिर्बाह्योपकरणेषु चेतनाचेतनेषु भोगाधिष्ठाने वा शरीरे पुरुषोपकरणे वा मनसि अनात्मन्यात्मख्यातिरिति। तथैतदत्रोक्तं व्यक्तमव्यक्तं वा सत्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनुनन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्वानः सर्वो प्रतिबुद्ध इत्येषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेशसन्तानस्य कर्माशयस्य च विपाकस्येति। तस्याश्चामित्रा गोष्पदवद्वस्तु सतत्वं विज्ञेयं। यथा नामित्रो मित्राभावो न मित्रमात्रङ्किन्तु तद्विरुद्धः सपत्नः। यथा वा गोष्पदं न गोष्पदा भावो न गोष्पदमात्रङ्किन्तु देश एव ताभ्यामन्यद्वस्त्वन्तरम्। एवमविद्या न प्रमाणं न प्रमाणाभावः किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति॥ ५॥

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता॥ ६॥

पुरुषो दृक् शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोरेकस्वरूपापत्ति रवास्मिता क्लेश उच्यते। भोग्यभोक्तृशक्त्योरत्यन्तविभक्तयोरत्यन्ता-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

क्षङ्गीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते । स्वरूपप्रतिल-
म्भे तु तयोः कैवल्यमेव भवति। कुतो भोग इति । तथा चोक्तम्—
बुद्धितः परमपुरुषमाकारशीलविद्यादिभिः विभक्तमपश्यन् कुर्या
त्तत्रात्मबुद्धिं मोहेनेति ॥ ६ ॥

सुखानुशयी रागः ॥ ७ ॥

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्धस्तृष्णा
लोभः स राग इति ॥ ७ ॥

दुःखानुशयी द्वेषः ॥ ८ ॥

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो
मन्युर्जिघांसा क्रोधः स द्वेषः ॥ ८ ॥

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः ९॥

सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति, मानभूवं भूया-
समिति। न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः। एतया च
पूर्वजन्मानुभवः प्रतीयते। स चायमभिनिवेशः क्लेशः स्वरसवाही
कृमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसंभावितो मरणत्रास
उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। यथा
चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वा-
परान्तस्य रूढः कस्मात् समाना हि तयोः कुशलाकुशलयोः
मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥

ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि
प्रलीने सह तेनैवास्तङ्गच्छन्ति ॥ १० ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

स्थितानान्तु बीजभावोपगतानां क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसंख्यानेन ध्यानेन हातव्याः । यावत्सूक्ष्मीकृता यावद्दग्धबीजकल्पा इति । यथा च वस्त्राणां स्थूलो मलः पूर्व्वन्निर्धूयते पश्चात् सूक्ष्मो यत्नेनोपायेन चापनीयते, तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां । सूक्ष्मास्तु महाप्रतिपक्षा इति ॥ ११ ॥

क्लेशमूलः कर्माशयो दृष्टादृष्ट जन्म वेदनीयः १२

तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रसवः स दृष्टजन्म-वेदनीयश्चादृष्टजन्म वेदनीयश्च । तत्र तीव्रसंवेगेन मन्त्रतपः समाधिभिर्निर्वर्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति । तथा तीव्र-क्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते । यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः । तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति । तत्र नारकाणां नास्ति दृष्टजन्म-वेदनीयः कर्माशयः क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति ॥ १२ ॥

सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति । नाच्छिन्नोक्लेश-मूलः । यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः प्ररोहसमर्था भवन्ति, नापनीततुषादग्धबीजभावा वा, तथा क्लेशा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सनड: कर्माशयो विपाकप्ररोही भवति, नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावो वेति । स च विपाकस्त्रिविधो जाति-रायुर्भोग इति । तत्रेदं विचार्य्यते, किमेकं कर्म एकस्य जन्मन: कारणमथैकंकर्मानेकं जन्माक्षिपतीति, द्वितीया विचारणा, किमनेकं कर्मानेकं जन्म निर्वर्तयति । अथानेककर्मैकंजन्म निर्वर्तयतीति, न तावदेकं कर्मैकस्य जन्मन: कारणं, कस्मादनादिकालप्रचितस्या-संख्येयस्यावशिष्टकर्मण: सांप्रतिकस्य च फलक्रमानियमात् । अनाश्वासो लोकस्य प्रसक्त: स चानिष्ट इति। न चैकं कर्मानेकस्य जन्मन: कारणं, कस्मादनेकेषु जन्मसु एकैकमेव कर्मानेकस्य जन्मन: कारणमित्यवशिष्टस्य विपाककालाभाव: प्रसक्त: स चाप्यनिष्ट इति । न चानेकं कर्मानेकस्य जन्मन: कारणं कस्मादनेकं जन्म युग-पन्न संभवतीति, क्रमेण वाच्यम्, तथा च पूर्वदोषानुषंग: । तस्मा-ज्जन्म प्रायणान्तरे कृत: पुण्यापुण्यकर्माशयप्रचयो विचित्र: प्रधा-नोपसर्ज्जनभावेनावस्थित: प्रायणाभिव्यक्त:, एकप्रघट्टके मिलि-त्वा मरणं प्रसाध्य संमूर्छित एकमेव जन्म करोति । तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति। तस्मिन्नायुषि तेनैव कर्मणा योग: संपद्यत इति। असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽ भिधीयत इति । अत एकभविक: कर्माशय उक्त इति । दृष्टजन्म-वेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वाद्द्विपाकारम्भी वायु-र्भोगहेतुत्वात्, नन्दीश्वरवत् नहुषवद्वेति । क्लेशकर्मविपाकानु भवनिर्मिताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्तं चित्रीकृतमिव सर्वतो मत्स्यजालग्रन्थिभिरिवाततं इत्येता अने-कभवपूर्व्विका वासना: । यस्त्वयं कर्माशय एष एवैकभविक उक्त इति । ये संस्कारा: स्मृतिहेतवस्ता वासना:, ताश्चानादि-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

कालीना इति। यस्त्वसावेकभविकः कर्म्माशयः स नियतविपाक-श्चानियतविपाकश्च। तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यै-वायं नियमो न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। कस्माद् यो ह्यदृष्टजन्मवेदनीयो नियतविपाकस्तस्य त्रयी गतिः। कृतस्या-विपाकस्य नाशः प्रधानकर्मण्यावापगमनं वा, नियतविपाकप्रधान-कर्मणाभिभूतस्य वा चिरमवस्थानमिति। तत्र कृतस्याविपक्वस्य नाशो, यथा शुक्लकर्मोदयादिहैव नाशः। कृष्णस्य यत्रेदमुक्तम्— द्वे द्वे ह वै कर्म्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽप हन्ति। तदिच्छस्व कर्म्माणि सुकृतानि कर्तुमिहैवते कर्म्म कवयो वेद-यन्ते॥ प्रधानकर्मण्यावापगमनं यत्रेदमुक्तम्—स्यात् स्वल्पः सङ्करः सपरिहारः स प्रत्यवमर्षः कुशलस्य नापकर्षायालम्। कस्मात्कुशलं हि मे बह्वन्यदस्ति। यत्रायमावापगतः स्वर्गेऽप्यपकर्षमल्पङ्करिष्य-तीति। नियतविपाकप्रधानकर्म्मणाभिभूतस्य वा चिरमवस्थानं कथमिति। अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्म्मणः समानं मरणमभिव्यक्तिकारणमुक्तम्, न त्वदृष्टजन्मवेदनीयस्यानियतविपा-कस्य। यत्त्वदृष्टजन्मवेदनीयं कर्म्मानियतविपाकन्तन्नश्येत्। आ-वापं वा गच्छेत्। अभिभूतं वा चिरमप्युपासितं, यावत्समानं-कर्म्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोतीति। तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्म्मगतिश्चित्रा दुर्विज्ञाना चेति न चोत्सर्गस्यापवादान् निवृत्तिरित्येकभविकः कर्म्माशयोऽनुज्ञायत इति॥ १३॥

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्॥१४॥**

ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः। अपुण्यहेतुकाः दुःख-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

फला इति। यथा चेदं दुःखं प्रतिकूलात्मकं एवं विषयसुखकाले ऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः कथं तदुपपद्यते ॥ १४ ॥

परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिनः ॥ १५ ॥

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव इति। तत्रास्ति रागजः कर्माशयः। तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति। तथा चोक्तम्—नानुपहत्य-भूतान्युपभोगः सम्भवतीति। हिंसाकृतोऽप्यस्ति शारीरः कर्म्मा-शय इति। विषयसुखं चाविद्येत्युक्तम्—या भोगेष्विन्द्रियाणां तृप्ते-रुपशान्तिस्तत्सुखं, या लौल्यादनुपशान्तिस्तद्दुःखं। न चेन्द्रि-याणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यं, कस्माद् यतो भोगाभ्यास-मनुविवर्द्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति। तस्मादनुपायः सुखस्य भोगाभ्यास इति। स खल्वयं वृश्चिकविषभीत इवाशीविषेण दष्टो यः सुखार्थी विषयाननुवासितो महति दुःखपङ्के मग्न इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति। अथ का तापदुःखता, सर्वस्य द्वेषानुविद्धश्चेतनाचेतन-साधनाधीनस्तापानुभव इति। तत्रास्ति द्वेषजः कर्म्माशयः सुखसा-धनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते। ततः परमनुगृह्णात्युपहन्ति चेति, परानुग्रहपीडाभ्याम् धर्म्माधर्म्मानु-पचिनोति। स कर्म्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतो-च्यते। का पुनः संस्कारदुःखता। सुखानुभवात् सुखसंस्कारातिशयो दुःखानुभवादपि दुःखसंस्कारातिशय इति। एवं कर्मभ्यो विपाके-ऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति। एवमिदम

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नादिदुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति। कस्मात् अक्षिपात्रकल्पो हि विद्वानिति। यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु। एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति, नेतरं प्रतिपत्तारं। इतरन्तु स्वकर्म्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यजन्तं त्यक्तमुपाददानं। अनादिवासनां विचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहङ्कारममकारानुपातिनञ्जातं जातं वाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते। तदेवमनादिदुःखस्रोतसा व्यूह्यमानमात्मानम्भूतग्रामं च दृष्ट्वा योगी सर्व्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति, गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिनः। प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवारभन्ते। चलञ्च गुणवृत्तमिति क्षिप्रपरिणामिचित्तमुक्तं रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते। सामान्यानि तु अतिशयैः सह प्रवर्तन्ते। एवमेते गुणा इतरेतराश्रयेणोपार्ज्जितसुखदुःखमोहप्रत्यया इति, सर्वसर्वरूपा भवन्ति। गुणप्रधानभावकृतस्त्वेषां विशेष इति। तस्माद् दुःखमेव सर्वं विवेकिन इति। तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या तस्याश्च सम्यग्दर्शनमभावहेतुः। यथा चिकित्साशास्त्रञ्चतुर्व्यूहं। रोगो रोगहेतुरारोग्यं भैषज्यमित्येवमिदमपि शास्त्रञ्चतुर्व्यूहमेव। तद्यथा संसारः संसारहेतुः मोक्षो मोक्षोपाय इति। तत्र दुःखबहुलः संसारो, हेयः प्रधानपुरुषयोः संयोगो हेयहेतुः संयोगस्यात्यन्तिकी निवृत्तिर्हानं हानोपायः सम्यग्दर्शनं। तत्र हातुः स्वरूपं उपादेयं हेयं न भवितुमर्हति इति। हाने तस्योच्छेदवादप्रसंगः, उपादाने च हेतुवादः, उभय-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

प्रत्याख्याने शाश्वतवाद इत्येतत्सम्यग् दर्शनं तदेतच्छास्त्रञ्चतुर्व्यू-हमित्यभिधीयते ॥ १५ ॥

हेयं दुःखमनागतम् ॥ १६ ॥

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्त्तते। वर्त्तमानञ्च स्वक्षणे भोगारूढमिति न तत् क्षणान्तरे हेयतामापद्यते। तस्माद्यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति, नेतरं प्रतिपत्तारं, तदेव हेयतामापद्यते। तस्माद्यदेव हेयमित्यु-च्यते। तस्यैव कारणं प्रति निर्दिश्यते ॥ १६ ॥

द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः। दृश्या बुद्धिसत्त्वोपारूढाः सर्वे धर्माः। तदेतद् दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन भवति पुरुषस्य स्वं दृशिरूपस्य स्वामिनः। अनुभवकर्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात्पर-तन्त्रं तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुर्दुःखस्य कारणमित्यर्थः। तथा चोक्तं तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतिकारः, कस्माद् दुःखहेतोः परिहार्यस्य प्रतिकारदर्शनात्, तद् यथा पादतलस्य भेद्यता कण्टकस्य भेत्तृत्वं परिहारः कण्टकस्य पादानधिष्ठानं पादत्राणव्यवहितेन वाधिष्ठानमेतत्त्रयं यो वेदलोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखन्नाप्नोति, कस्मात् त्रित्वोपलब्धिसामर्थ्यादिति। तत्रापि तापकस्य रजसः सत्त्वमेव तप्यं, कस्मात् तपिक्रियायाः कर्मस्थत्वात्सत्त्वे कर्म्मणि तपिक्रियानापरिणामिनि निष्क्रिये क्षेत्रज्ञे दर्शितविषयत्वात्

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

प्रतर्द्दना अञ्जनाभाः प्रतिताभाइत्येते महाभूतवशिनो ध्याना-हाराः कल्पसहस्रायुषः प्रथमे ब्रह्मणो जनलोके चतुर्व्विधो देवनिकायो ब्रह्मपुरोहिताः ब्रह्मकायिकाः ब्रह्ममहाकायिका अमरा इति ते भूतेन्द्रियवशिनो द्विगुणो द्विगुणोत्तरायुषो द्वितीये तपसि लोके त्रिविधो देवनिकायः आभास्वरा महाभास्वरा सत्यमहाभास्वरा इति ते भूतेन्द्रियप्रकृतिवशिनः द्विगुणद्विगु-णोत्तरायुषः सर्व्वे ध्यानाहाराः ऊर्द्धरेतस ऊर्द्धमप्रतिहतज्ञानाः। अधरभूमिष्वनावृतज्ञानविषयाः तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अच्युताः शुद्धनिवासाः सत्याभाः संज्ञा-संज्ञिनश्चेति अकृतभुवनन्यासाः स्वप्रतिष्ठा उपर्य्युपरिस्थिताः प्रधानवशिनो यावत् स्वर्गायुषः तत्राच्युताः सवितर्कध्यानसुखाः शुद्धनिवासाः सविचारध्यानसुखाः सत्याभा आनन्दमात्र ध्यान-सुखाः संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखास्तेऽपि त्रैलोक्यमध्ये प्रतितिष्ठति । तत्र ते सप्त लोकाः सर्व्वे एव ब्रह्मलोका विदेहप्रकृतिलयास्तु मोक्षपदे वर्त्तन्ते न लोकमध्ये न्यस्ता इत्येतद् योगिना साक्षात्कर्त्तव्यं सूर्य्यद्वारे संयमं कृत्वा ततोऽन्यत्रापि एवं तावदभ्यसेद् यावदिदं सर्वं दृष्टमिति ॥ २६ ॥

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

चन्द्रे संयमं कृत्वा ताराव्यूहं विजानीयात् ॥ २७ ॥

## ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं जानीयात्। ऊर्द्धविमानेषु कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वात-पित्तश्लेष्माणस्त्रयो दोषाः सन्ति धातवः सप्त । त्वग्लोहित मांसस्नाय्वस्थिमज्जाशुक्राणि पूर्वं पूर्वमेषां बाह्यमित्येष वि-न्यासः ॥ २९ ॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

जिह्वाया अधस्तात् तन्तुस्तन्तोरधस्तात्कण्ठस्ततोधस्तात् कूपस्तत्र संयमात् क्षुत्पिपासे न बाधेते ॥ ३० ॥

कूर्म्मनाड्यां स्थैर्य्यम् ॥ ३१ ॥

कूपादध उरसि कूर्म्माकारा नाड़ी तस्यां कृतसंयमः स्थिर-पदं लभते यथा सर्पोगोधाविति ॥ ३१ ॥

मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

शिरः कपाले अन्तः छिद्रं प्रभास्वरं ज्योतिस्तत्र स माल्सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनं भवति ॥ ३२ ॥

प्रातिभाद्वा सर्वम् ॥ ३३ ॥

प्रातिभं नाम तारकं तद्विवेकजस्य पूर्वरूपं यथोदये प्रभा भास्करस्य तेन वा सर्व्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३२ ॥

हृदये चित्तसंवित् ॥ ३४ ॥

यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञान तस्मिन् संयमात् चित्तसम्वित् ॥ ३४ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययां विशेषो भोगः परार्थत्वात् स्वार्थसंयमात् पुरुषज्ञानम् ॥३५॥

बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य सत्त्वपुरुषान्यता प्रत्ययेन परिणतं, तस्माच्च सत्त्वात् परिणामिनोत्यन्तविधर्म्मात् शुद्धोन्यश्चितिमात्ररूपः पुरुषस्तयोर सङ्कीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शित विषयत्वात्, स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद्दृश्यः। यस्तु तस्माद्विशिष्टश्चिति-मात्ररूपोन्यः पौरुषेयप्रत्ययस्तत्र संयमात् पुरुषविषया प्रज्ञा जायते। न च पुरुष प्रत्ययेन बुद्धिसत्त्वात्मना पुरुषोदृश्यते पुरुष एव प्रत्ययं स्वात्मावलम्बनं पश्यति। तथा ह्युक्तम् विज्ञातारम रेकेन विजानीयादिति ॥ ३५ ॥

ततः प्रातिभश्रावण वेदनादर्शास्वाद वार्ता-जायन्ते ॥ ३६ ॥

प्रातिभात् सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानं, श्राव णाद्दिव्यशब्दश्रवणम्, वेदनाद्दिव्य स्पर्शाधिगमः, आदर्शाद्दिव्य-रूपसम्वित्, आस्वादाद्दिव्यरसंसम्वित्, वार्त्तातो दिव्यगन्धविज्ञा-नमित्येतानि नित्यं जायन्ते ॥ ३७ ॥

ते समाधावुपसर्गाव्युत्थाने सिद्धयः ॥ ३७ ॥

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपस-र्गास्तद्दर्शनप्रत्यानीकत्वात्, व्युत्थितचित्तस्योत्पद्यमानाः सि-द्धयः ॥ ३७ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥

लोलीभूतस्य मनसो प्रतिष्ठस्य शरीरे कर्म्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः तस्य कर्म्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति प्रचारसम्वेदनञ्च चित्तस्य समाधिजमेव कर्म्मबन्धक्षयात् स्वचित्तस्य प्रचारसम्वेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति निक्षिप्तं चित्तञ्चेन्द्रियाण्यनुपतन्ति यथा मधुकरराजानं मक्षिका उत्पतन्तमनुत्पतन्ति निविशमानमनु निविशन्ते तथेन्द्रियाणि परशरीरावेशे चित्तमनुविधीयन्त इति ॥ ३८ ॥

उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं तस्य क्रियापञ्चतयी। प्राणोमुखनासिकागतिराहृदयवृत्तिः। समं नयनात् समानश्चानाभिवृत्तिः। अपनयनादपान आपादतलवृत्तिः। उन्नयनादुदान आशिरोवृत्तिः। व्यापी व्यान इति एषां प्रधानः प्राणः। उदानजयाज्जलपङ्ककण्ठाकाशादिष्वसङ्गः उत्क्रान्तिश्च प्रायणकाले भवति तां वशित्वेन प्रतिपद्यते ॥ ३९ ॥

समानजयाज्ज्वलनम् ॥ ४० ॥

जितसमानस्तेज स उपध्मानं कृत्वा ज्वलति ॥ ४० ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

श्रोत्राकाशयोः सम्बन्धसंयमाद्दिव्यं श्रोत्रम् ॥४१॥

सर्व्वश्रोत्राणामाकाशं प्रतिष्ठासर्व्वशब्दानाञ्च । यथोक्तम् तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्व्वेषां भवतीति । तच्चैतदाकाशस्य लिङ्गं अनावरणञ्चोक्तम् । तथाह मूर्त्तस्यानावरणदर्शनाद्विभूत्वमपि प्रख्यातमाकाशस्य शब्दग्रहणनिमित्तं श्रोत्रं वधिरावधिरयोरेकः शब्दं गृह्णात्यपरो नगृह्णातीति तस्मात् श्रोत्रमेव शब्दविषयं श्रोत्राकाशयोः सम्बन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते ॥ ४१ ॥

कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्ते-श्चाकाशगमनम् ॥ ४२ ॥

यत्र कायस्तत्राकाशं तस्यावकाशदानात् कायस्य तेन सम्बन्धप्राप्तिस्तत्र कृतसंयमो जित्वा तत् सम्बन्धं लघुषु तूलादिष्वापरमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघु भवति लघुत्वाच्च जले पादाभ्यां विहरति ततस्तूर्णनाभि तन्तुमात्रे विहृत्य रश्मिषु विहरति ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४२ ॥

वहिरकल्पिता वृत्तिर्म्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥

शरीराद्वहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा सा यदि शरीरप्रतिष्ठस्य मनसो वहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते या तु शरीरनिरपेक्षा वहिर्भूतस्यैव मनसो वहिर्वृत्तिः सा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्वरूपकल्पिता । तत्र कल्पितया साधयत्यकल्पितां महाविदेहा-मिति यया परशरीराण्याविशन्ति योगिनः ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्त-मोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

स्थूलस्वरूप सूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४४ ॥

तत्र पार्थिवाद्याः शब्दादियो विशेषाः सहकारादिभिर्धर्म्मैः स्थूलशब्देन परिभाषिता एतद्भूतानां प्रथमं रूपं द्वितीयं रूपं स्वसामान्यं मूर्त्तिर्भूमिः स्नेहोजलं वह्निरुष्णता वायुः प्रणामी सर्व्वतो गतिराकाश इत्येतत् स्वरूपशब्देनोच्यते अस्य सामान्यस्य शब्दादयोविशेषाः तथाचोक्तं एकजातिसमन्वितानामेषां धर्म-मात्रव्यावृत्तिरिति, सामान्यविशेषसमुदायोऽत्रद्रव्यं, द्विष्टोहि समूहः प्रत्यस्तमिति भेदावयवानुगतः शरीरं वृक्षोयूथंवनमिति, शब्देनो पात्तभेदा वयवानुगतः समूह उभये देवमनुष्याः समूहस्य देवा एको भागो मनुष्याद्वितीयोभागस्ताभ्यामे वा भिधीयते समूहः। स च भेदाभेदविवक्षित आम्राणां वनं ब्राह्मणानां संघ इति । स पुनर्द्विविधो युत सिद्धावयवो ऽयुत सिद्धावयवश्च युत सिद्धावयवः समूहोवनं सङ्घ इति । अयुतं सिद्धावयवः संघातः शरीरं वृक्षः परमाणुरिति अयुत सिद्धावयवभेदानुगतः समूहोद्रव्यमिति पतंजलिः एतत् स्वरूपमित्युक्तं । अथ किमेषां सूक्ष्मरूपतन्मात्रभूतकारणं तस्यैकावयवः परमाणुः सामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वतन्मात्राणि एतत्तृतीयम् । अथ भूतानां चतुर्थं रूपं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ख्यातिक्रियास्थितिशीलागुणाः कार्यस्वभावानुपातिनोन्वयशब्दे-नोक्ताः। अथैषां पंचमरूपमर्थत्वं भोगापवर्गार्थता गुणेष्वन्वयिनो गुणास्तन्मात्रभूतभौतकेष्विति सर्वमर्थवत् तेष्विदानींभूतेषु पंचसु पञ्च रूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति तत्र पञ्चभूतस्वरूपाणि जित्वा भूतजयी भवति तज्जयाद्वत् सानुसा रिण्य इव गावो स्य सङ्कल्पानुविधायिन्योभूतप्रकृतयो भवति ॥ ४४ ॥

## ततो ऽणिमादि प्रादुर्भावः कायसम्पत्तद्धर्म्मा-नभिघातश्च ॥ ४५ ॥

तत्राणिमा भवत्यणुः। लघिमालघुर्भवति महिमा महान्भवति प्राप्तिरंगुल्यग्रेणा पिस्पृशति चन्द्रमसं प्रकाम्यमिच्छानभिघातः, भूमावुन्मज्जति मज्जति यथोदके वशित्वंभूतभौतिकेषु वशि भवत्यवश्यश्चान्येषां, ईशित्वं, तेषां प्रभवाप्ययव्यूहानामीष्टे य-त्रकामावसायित्वं सत्यसंकल्पता यथा संकल्पस्तथाभूतप्रकृतीनाम वस्थानं, न च शक्तो ऽपि पदार्थ विपर्यासङ्करोति, कस्मात अन्यस्य यत्रकामावसायि नः पूर्वसिद्धस्य तथांभूतेषु सङ्कल्पादिति, एतां-न्यष्टवैश्वर्याणि,कायसम्पद्वक्ष्यमाणा, तद्धर्मानभिघातश्च पृथ्वीमूर्त्या-नांनरूणद्धियोगिनः शरीरादिक्रियां शिलामप्यनुविशतीति, नापः स्निग्धाः क्लेदयंति, नाग्नि रुष्हति, नवायुः प्रणामीवहत्य नावर-णात्मके प्याकाशे भवत्यावृत्त कायः सिद्धानामप्यदृश्यो भवति ४५

## रूपलावण्यवलवज्रसंहननत्वानिकायसंपत् ४६ ॥

दर्शनीयः कांतिमान् अतिशयबलः वज्रसंहननश्चेति ॥ ४६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

गृहणस्वरूपास्मितान्वयार्थवत्वसंयमा दिन्द्रिय-जय: ॥ ४७ ॥

सामान्यविशेषात्माशब्दादिग्राह्य:, तेष्विन्द्रियाणां वृत्तिर्ग्रहणं, नचतत्सामान्यमात्रगृहणाकारं, कथमनालोचित: सविषयविशेषइन्द्रियेणमनसानुव्यवसीयेतेति, स्वरूपंपुन: प्रकाशत्मनोबुद्धिसत्वस्यसामान्यविशेषयोरयुत सिद्धावयवभेदानुगत: समूहोद्रव्यमिन्द्रियन्तेषांद्वतीयंरूप मस्मिता लक्षणोहंकार:, तस्यसामान्यस्येन्द्रियाणि विशेषा:, चतुर्थं रूपं व्यवसायातृमका: प्रकाशक्रिया स्थितिशीलागुणा: येषामिन्द्रियाणि साहंकाराणि परिणाम:, पञ्चमंरूपं गुणेषुयदनुगतं पुरुषार्थवत्वमिति, पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमंसंयम: तत्र तत्र जयंकृत्वा पञ्चरूपजयादिन्द्रियजय: प्रादुर्भवति योगिन: ॥ ४७ ॥

ततो मनोजवित्वं विकारणभाव: प्रधानजयश्च ॥ ४८ ॥

कायस्यानुत्तमोगतिलाभोमनोजवित्वं विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयोवृत्तिलाभो विकरणभाव: सर्वप्रकृति विकारवशित्वं प्रधानजयइत्येतास्तिस्त्र: सिद्धयोमधु प्र तीका उच्यन्ते एताश्च करणपञ्चकरूप जयादधिगम्यन्ते ॥ ४८ ॥

सत्वपुरुषा न्यताख्यातिमात्रस्यसर्वभावाधिष्टातृत्वं सर्वज्ञातृत्वंच ॥ ४९ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

निर्द्धूतरजस्तमो मलस्य बुद्धिसत्वस्य परेवैशारद्येपरस्यां वशीकार संज्ञायां वर्त्तमानस्य सत्वपुरुषा न्यताख्यातिमात्र रूपप्रतिष्टस्य सर्वभावाधिष्टातृत्वं सर्वात्मानो गुणाव्यवसाय व्यवसेयात्मकाः स्वामिनंक्षेत्रज्ञं प्रत्य शेषदृश्यात्मनोपस्थिता इत्यर्थः सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिता व्यपदे-श्य धर्मत्वेनव्यवस्थितानाम क्रमोपारूढं विवेकजं ज्ञानमि-त्यर्थः इत्येषाविशोका नामसिद्धिः यांप्राप्ययोगोसर्वज्ञः क्षीण क्लेशबन्धनोवशीविहरति ॥ ४९ ॥

## तद्वैराग्यादपिदोष वीजक्षयेकैवल्यम् ॥ ५० ॥

यदास्यैवंभवतिक्लेश कर्मक्षये सत्वस्यायं विवेकप्रत्ययोधर्मः सत्वं चहेयपक्षेन्यस्तं पुरुषश्चापरिणामीशुद्धोन्यः सत्वादित्येवमस्य ततोविरंजयमानस्यया निक्लेशवीजानिदग्धशालिवी जकल्पान्य प्रसवसमर्थानिसहमनसाप्रत्यस्तं गच्छन्तितेषु प्रलीनेषुपुरुषः पुनरिदन्तापत्रयं नभुंक्ते तदेतेषां गुणानां मनसि कर्मक्लेशविपा-कस्वरूपेणाभिव्यक्तानां चरितार्थाना मप्रतिप्रसवे पुरुषस्यात्यन्ति-कोगुणवियोगः कैवल्यं तदास्वरूप प्रतिष्ठाचिति शक्तिरेवपुरुष इति ॥ ५० ॥

## स्थान्युपनिमन्त्रणेसङ्गस्मयाकरणं पुनरनिष्टप्रस-ङ्गात् ॥ ५१ ॥

चत्वारः खल्वमीयोगिनः प्रथमकल्पिकोमधुभूमिकः प्रज्ञाज्यो तिरतिक्रान्तभावनीयश्चेति तत्राभ्यासीप्रवृत्तमात्रज्योतिः प्रथमः ऋतंभरप्रज्ञोद्वितीयः भूतेन्द्रियजयीतृतयः सर्वेषु भावितेषु माव

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नीयेषुक्तस्तत्राभ्यः कृतक॰ व्यसाधनादिमांश्चतुर्थोयस्त्वतिक्रान्त
भावनीयस्तस्यचित्तप्रतिसर्गएकोर्थः सप्तविधा अस्यप्रान्तभूमिप्रज्ञाः
तत्रमधुमतींभूमिंसाक्षात् कुर्वतोब्राह्मणस्यस्थानिनोदेवाः सत्व-
शुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते भोइहास्यतां इहरम्यतां
कमनीयोयंभोगः कमनीयेयङ्कन्यारसायनमिदंजरामृत्युंबाधते-
वैहायसमिदंयानममीकल्पद्रुमाः पुण्यामन्दाकिनीसिद्ध मह-
र्षयउत्तमा अनुकूलाअप् सरसोदिव्ये श्रोत्रचक्षुषोवज्रोपमः
कायः स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्ष-
य्यमजरममरस्थानंदेवानांप्रियमित्ये वमभिधीयमानः सङ्गदोषान्
भावयेत् घोरेषुसंसाराङ्गारेषु पच्यमानेनमयाजननमरणान्ध
कारेविपरिवर्तमानेनकथञ्चिदासादितः क्लेशतिमिरविनाशीयोग
प्रदीपस्तस्य चैतेतृष्णायोनयोविषयवायवः प्रतिपक्षाः सखल्वहंल-
ब्धालोकः कथमनयाविषयमृगतृष्णयावञ्चितस्तस्यैवपुनः प्रदीप्तस्य
संसाराग्नेरात्मानमिन्धनीकुर्यामितिस्वस्तिवः स्वप्नोपमेभ्यः कृप
णेभ्याः कृपणजनप्रार्थनीयेभ्यो विषयेभ्यइत्येवंनिश्चितमतिः समा
धिम्भावयेत्सङ्गम कृत्वास्मयमपिनकुर्य्यात् एवमहन्देवानामपि
प्रार्थनीय इतिस्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु
गृहीतमिवात्मानं न भावयिष्यति तथाचास्यछिद्रान्तरप्रेक्षीनित्य
यत्नोपचर्यः प्रमादोलब्धविवरः क्लेशानुत्तम्भयिष्यति। ततः
पुनरनिष्ट प्रसंगः। एवमस्यसङ्गस्मयावकुर्वतोभावितोऽर्थोदृढी
भविष्यति भावनीयश्चार्थोभिमुखीभविष्यतीति ॥ ५१ ॥

**क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥**

यथापकर्षपर्यंतद्रव्यं परमाणुरेवम्परमापकर्षपर्यन्तः कालः
क्षणः यावतावा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेश

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

भुपमं पर्य्यन्तसकाल: क्षण: तत्प्रवाहाविच्छेदस्तुक्रम: क्षणतत्क्रमयोर्नास्तिवस्तुसमाहार इति बुद्धिसमाहारो मुहूर्त्ताहोरात्रादय: सखल्वयं कालो वस्तुशून्यो बुद्धि निर्माण: शब्द ज्ञानानुपातीलौकिकानांव्युत्थित दर्शनानां वस्तुस्वरूप इवावभासते क्षणस्तु वस्तु पतित: क्रमावलम्बी क्रमश्चक्षणानन्तर्य्यात्मा तं कालविदा: कालइत्याचक्षते योगिन: नच द्वौक्षणौ सह भवत: क्रमश्च न द्वयो: सहभुवोरसंभवात् पूर्व्वस्मादुत्तरस्य भाविनोयदानन्तर्य्यं क्षणस्य स क्रमस्तस्माद्वर्त्तमान एकैक: क्षणोन पूर्व्वोत्तरेक्षणा: सन्तीति तस्मान्नास्ति तत् समाहार: येतु भूतभाविन: क्षणास्ते परिणामान्विता व्याख्येयास्तेनैकेन क्षणेन कृत्स्नोलोक: परिणाममनुभवति तत्क्षणोपारूढ़ा: खल्वमी धर्म्मास्तयो: क्षणतत्क्रमयो: संयमात्तयो: साक्षात्करणं ततश्च विवेकजं ज्ञानं प्रादुर्भवति। तस्य विषयविशेष. उपक्षिप्यते ॥ ५२ ॥

## जातिलक्षणदेशैरन्यतानवच्छेदात्तुल्ययोस्तत: प्रतिपत्ति: ॥ ५३ ॥

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यतायां हेतुर्गौरियंवडवेयमिति। तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरङ्कालाक्षीगौरियं स्वस्तिमतीगौरिति द्वयोरामलकयोर्जाति लक्षणसारूप्याद्देशभेदोन्यत्वकरइदम्पूर्वमिद मुत्तरमिति यदातुपूर्वमामलकमन्यव्यग्रस्यज्ञातु रुत्तरदेश उपावर्त्त्यतेतदातुल्य देशत्वेपूर्वमेतदुत्तरमेत दितिप्रतीति प्रविभागानुपपत्ति:असंदिग्धेनचतत्वज्ञानेन भवितव्यमित्यतइदमुक्तं तत: प्रति पत्तिर्विवेक जज्ञानादितिकथं पूर्वामलकसहक्षणोदेश उत्तरामलकसहक्षणाद्देशाद्भिन्नस्ते चाम-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

लक्ते स्वदेशचणानुभवभिन्नो अन्यदेशचणानुभवस्तु, तयोरन्यत्व-हेतुरिति ॥

एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्व्वपर माणुदेशसहक्षणसाक्षात् करणात् उत्तरस्य परमाणोस्तद्देशानु-पपत्तौ उतरस्य तद्देशानुभवोभिन्नः सहलक्षणभेदात्तयोरीश्वरस्य योगिनः अन्यत्वप्रत्ययो भवति इति। अपरेतु वर्णयन्ति—येऽस्त्यगा-विशेषास्ते ऽन्यताप्रत्ययं कुर्व्वन्तीति, तत्रापि देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्चान्यत्वहेतुः क्षणभेदस्तु योगिबुद्धिगम्य एवेति। अतउक्तं मूर्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्व मिति वार्षगण्यः ॥ ५३ ॥

## तारकसर्व्वविषयं सर्व्वार्थाविषमक्रमं चेति विवे-कजं ज्ञानं ॥ ५४ ॥

तारकमिति। स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः। सर्व्वबिषयं नास्य किञ्चिदविषयीभूतमित्यर्थः। सर्व्वथा विषय मतीतानाग-तप्रत्युत्पन्नं सर्व्वैः पर्यायैः सर्व्वथा जानातीत्यर्थः। अक्रममित्येक-क्षणोपारूढ़ं सर्व्वं सर्व्वथा गृह्णातीत्यर्थः। एतद्विवेकजं ज्ञानं परिपूर्णमस्यैवांशोयोगप्रदीपोमधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति, प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा ५४

## सत्वपुरुषयोः शुद्धिसाम्येकैवल्यमिति ॥ ५५ ॥

यदा निर्धूतरजस्तमोमलं बुद्धिसत्वं पुरुषस्यान्यता प्रत्य-यमात्राधिकारं दग्धक्लेशबीजं भवति, तदा पुरुषस्य शुद्धिसारूप्य-मिवापन्नं भवति, तदा पुरुषस्योपचरितभोगाभावः शुद्धिः। एतस्या-मवस्थायां कैवल्यं भवति। ईश्वरस्यानीश्वरस्य वा विवेकजज्ञा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

नम्भागिन इतरस्य वा नहि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति । सत्वशुद्धिद्वारेण एतत्समाधिजमैश्वर्य्यञ्च ज्ञानं चोपक्रान्तपरमार्थतस्तु ज्ञानाद्दर्शनं निवर्त्तते तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः क्लेशाऽभावात् कर्म्मविपाकाभावश्चरिताधिकाराश्चैतस्यामवस्थायां गुणानपुरुषस्य पुनर्दृश्यत्वेन उपतिष्ठन्ते तत् पुरुषस्य कैवल्यं तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

॥ इतिपातञ्जलभाष्यप्रवचने बिभूतिपादस्तृतीयः ॥

---

## जन्मौषधिमन्त्रतपः समाधिजाः सिद्धयः ॥ १ ॥

देहान्तरिता जन्मना सिद्धिः औषधिभिरसुरभवनेषु रसायनेनेत्येवमादि। मन्त्रैराकाशगमनाणिमादिलाभः, तपसा संकल्पसिद्धिः कामरूपो यत्र तत्र कामग इत्येवमादिसमाधिजाः सिद्धयो व्याख्याता ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम् ॥

## जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

पूर्व्वपरिणामापाये उत्तरपरिणामोपजनस्तेषां पूर्व्वावयवानुप्रवेशाद्भवति, कायेन्द्रियप्रकृतयश्च स्वं स्वं विकार मनुगृह्णन्ति आपूरेण धर्म्मादि निमित्तमपेक्षमाणा इति ॥ २ ॥

## निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥

नहि धर्म्मादिनिमित्तं प्रयोजकं प्रकृतीनां भवति न कार्य्येण कारणं प्रवर्त्यत इति। कथं तर्हिवरणभेदस्तु ततः क्षेत्रिकवत् यथा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

चेत्रिकः केदारादपां पूर्णात् केदारान्तं पिप्लावयिषुः समं निम्नं निम्नतलं वालापः पाणिनापकर्षत्या वरणं त्वासां भिनत्ति, तस्मिन् भिन्ने स्वयमेव आपः केदारान्तरमाप्लावयन्ति तथा धर्म्मः प्रकृती नासावरणमधर्म्मं भिनत्ति तस्मिन् भिन्ने स्वयमेव प्रकृतय स्वं स्वं विकारमाप्लावयन्ति। यथा वा स एव चेत्रिकस्तस्मिन्नेव केदारेण प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनु प्रवेशयितुं किन्तर्हि मुद्गवेधुकश्यामाकादींस्ततोपकर्षत्यपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति। तथा धर्म्मोनिवृत्तिमात्रे कारणमधर्म्मस्य शुद्ध्य शुद्ध्योरत्यन्तविरोधात् न तु प्रकृतिप्रवृत्तौ धर्म्मोहेतुर्भवतीति। अत्रनन्दीश्वरादय उदाहार्य्याः विपर्य्ययेनाप्य धर्म्मोधर्म्मं बाधते ततश्चाशुद्धिपरिणाम इति तत्रापि नहुषाजग रादय उदाहार्य्याः। यदातु योगी बहून् कायान्निर्म्मिमीते तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्का—इति ॥ ३ ॥

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

अस्मितामात्रं चित्तकारणमुपादाय निर्म्माणचित्तानि करोति ततः सचित्तानि भवन्ति ॥ ४ ॥

## प्रवृत्तिभेदेप्रयोजकं चित्तमेकमनेकेषां ॥ ५ ॥

बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरःसरा प्रवृत्तिरिति सर्व्वचित्तानां प्रयोजकं चित्तमेकं निर्म्मिमीते ततः प्रवृत्तिभेदः ॥५॥

## तत्र ध्यानजमनाशयः ॥ ६ ॥

पञ्चविधं निर्म्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय-इति तत्र यदेव ध्यानजं चित्तं तदेवानाशयं तस्यैव नास्त्रा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

शयो रागादिप्रवृत्तिर्नातः पुण्यपापाभिसम्बन्धः क्षीणक्लेशत्वात् योगिन इति। इतरेषान्तु विद्यते कर्माशयो यतः ॥ ६ ॥

कर्म्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥७॥

चतुष्पात् खल्वियं कर्म्मजातिः। कृष्णा। शुक्लकृष्णा। शुक्ला। अशुक्लाऽकृष्णाचेति तत्र कृष्णा दुरात्मनां। शुक्लाकृष्णा वहिः साधनसाध्या, तत्र परपीडानुग्रहद्वारेण कर्म्माशयप्रचयः। शुक्ला तपःस्वाध्यायध्यानवतां सा हि केवले मनसि आयत्तत्वाद्वहिः साधनाधीनात्परान् पीडयित्वा भवति। अशुक्ला अकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति। तत्राशुक्लं योगिन एव फलसंन्यासादकृष्णं चानुपादानात् इतरेषान्तु भूतानां पूर्व्वमेव त्रिविधमिति ॥ ७ ॥

ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

तत इति त्रिविधात् कर्म्मणः। तद्विपाकानुगुणानामेवेति यज्जातीयस्यकर्म्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्म्मविपाकमनुशेरते तासामेवाभिव्यक्तिर्न हि दैवं कर्म्म विपच्यमानं नारकतिर्य्यङ्मनुष्यवासनाभिव्यक्ति निमित्तं भवति किन्तु दैवानुगुणा एवास्य वासना व्यज्यन्ते नारकतिर्य्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृति संस्कारयोरेकरूपत्वात् ॥ ९ ॥

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

स्वव्यञ्जकाञ्जन एवोदियात् द्रागि त्येवं पूर्व्वानुभूत वृषदंशविपाकाभिसंस्कृता वासना उपादाय व्यज्येत, कस्मात् यतो व्यवहितानामप्यासां सदृशं कर्म्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्य्यमेव। कुतश्च स्मृतिसंस्कारयोरेक रूपत्वात् यथानुभवास्तथा संस्काराः। ते च कर्म्मवासनारूपाः यथा च वासनास्तथा स्मृतिरिति, जातिदेशकाल व्यवहितेभ्यः संस्कारेभ्यः स्मृतिः स्मृतेश्च पुनः संस्काराः इत्येते स्मृति संस्काराः कर्म्माशयवृत्तिलाभवशाद्व्यज्यन्ते। अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्य्यमेव सिद्धमिति ॥ ९ ॥

## तासामनादित्वं चाशिषोनित्यत्वात् ॥ १० ॥

तासां वासनानामाशिषो नित्यत्वादनादित्वं। येयमात्माशीर्मानभूवं भूयासमिति सर्वस्य दृश्यते, सा न स्वाभाविकी कस्मात् जातमात्रस्य जन्तोरननुभूतमरणधर्म्मकस्य द्वेषदुःखानुस्मृतिनिमित्तोमरणत्रासः कथं भवेत्। न च स्वाभाविकं वस्तुनिमित्त मुपादत्ते तस्मादनादिवासनानुविद्धमिदं चित्त निमित्त वशात्काश्चिदेववासनाः प्रतिलभ्यपुरुषस्य भोगायोपावर्तते इति। घटप्रासादप्रदीपकल्पं। सङ्कोचविकाशिचित्तं शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्ना, स्तथाचान्तराभावः संसारश्च युक्त इति वृत्तिरेवास्य विभुनः संकोचविकाशिनीत्या चार्य्यः तच्च धर्मादिनिमित्तापेक्षं निमित्तं च द्विविधं, वाह्यमाध्यात्मिकं च शरीरादिसाधनापेक्षं बाह्यं, स्तुतिदानाभिवादनादिचित्तमात्राधीनं श्रद्धाद्याध्यात्मिकं। तथाचोक्तं ये चेते मैत्र्यादयोध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्म्ममभिनिर्वर्त्तयन्ति, तयोर्मानसं बलीयः कथं ज्ञानवैराग्येकेनातिशय्यते

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणाशून्यं कर्तुमुत्सहेत समुद्रमगस्त्यवद्वा पिबेत् ॥ १० ॥

हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥ ११ ॥

हेतुर्धर्मात् सुखमधर्म्मात् दुःखं, सुखाद्रागो दुःखाद्द्वेषस्ततश्च प्रियत्नस्तेन मनसावाचाकायेन वा परिस्पन्दमानः। परमनुगृह्णाति उपहन्ति वा ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति। प्रवृत्तमदं षड़रं संसार चक्रस्य च प्रतिक्षणमावर्त्तमानस्याऽविद्यानेत्रीमूलं सर्व्वक्लेशानामित्येषा हेतुः, फलन्तु यमाश्रित्य यस्य प्रत्युत्पन्नताधर्मादेः न ह्यपूर्वोपजनः मनस्तु साधिकारमाश्रयो वासनानां नह्यवसिताधिकारे मनसिनिराश्रयावासनाः स्थातु मुत्सहन्ते, यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदावलम्बनमेवं हेतुफलाश्रयालम्बनैरेतैः संगृहीताः सर्वावासनाः एषामभावे तत्संश्रयाणामपि वासनानामभावः नास्त्यसतः सम्भवो नवास्ति सतोविनाश इति द्रव्यत्वेन सम्भवन्त्यः कथं निवर्तिष्यन्ते वासना इति ॥ ११ ॥

अतीतानागतं स्वरूपतोऽस्त्यध्वभेदात् धर्म्माणां ॥ १२ ॥

भविष्यत् व्यक्तिकमनागतं अनुभूतव्यक्तिकमतीतं, स्वव्यापारोपारुढं वर्तमानं त्रयञ्च तद्वस्तु ज्ञानस्य ज्ञेयं, यदिचैतत्स्वरूपतो नाभविष्यन्नेदं निर्विषयं ज्ञानमुदपत्स्यत्, तस्मादतीतानागतं स्वरूपतोस्तीति, किञ्च भोगभागी यस्य वापवर्गभागी यस्य वा कर्म्मणः फलमुत्पित्सुः यदिनिरूपाख्यमिति तदुद्देशेन तेन निमि-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

त्तेन कुशलानुष्ठानं न युज्येत, सतश्च फलस्य निमित्तं वर्त्तमानीकरणे समर्थं नापूर्वोपजनने सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहणं कुरुते नापूर्वमुत्पादयति। धर्मी चानेकधर्म्मस्वभावस्तस्य चाध्वभेदेन धर्माः प्रत्यवस्थिताः न च यथा वर्त्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्त्येवमतीत मनागतं च, कथं तर्हि स्वेनैव व्यङ्ग्येन स्वरूपेणानागतमस्ति स्वेन चानुभूतव्यक्तिकेन स्वरूपेणातीतमिति, वर्त्तमानस्यैवाध्वनः स्वरूपव्यक्तिरिति न सा भवत्यतीतानागतयोरध्वनोरेकस्य चाध्वनः समये द्वावध्वानौ धर्म्मिसमन्वागतौ भवत एवेति नाभूत्वाभावस्त्रयाणामध्वानाम् इति ॥ १२ ॥

## ते व्यक्तसूक्ष्मागुणात्मानः ॥ १३ ॥

ते खल्वमीत्र्यध्वानो धर्मावर्त्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः षड्विशेषरूपाः, सर्वमिदं गुणानां सन्निवेशविशेषमात्रमिति, परमार्थतो गुणात्मानः। तथा च "शास्त्रानुशासनं गुणानां परमरूपं न दृष्टिपथमृच्छति, यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छक" मिति। यदा तु सर्वेगुणाः कथमेकः शब्दएकमिन्द्रियमिति ॥ १३ ॥

## परिणामैकत्वाद्वस्तुतत्वम् ॥ १४ ॥

प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेनैकः परिणामः श्रोत्र मिन्द्रियं ग्राह्यात्मकानां शब्दभावेनैकः परिणामः शब्दोविषय इति। शब्दादीनां मूर्तिसमानजातीयानामेकः परिणामः पृथ्वीपरमाणुस्तन्मात्रावयवस्तेषां चैकः परिणामः पृथ्वीगौर्वृक्षः पर्वतइत्येवमादिः भूतान्तरेष्वपि स्नेहौष्ण्य-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

प्रणामित्वावकाशदानान्युपादाय सामान्यमेकविकारारम्भः समाधेयः नास्त्यर्थो विज्ञानविसङ्गचरेणाऽस्ति तु ज्ञानमर्थविसङ्गचरं स्वप्नादौ कल्पितमित्यनया दिशा ये वस्तुस्वरूपमपन्हवस्ते ज्ञानपरिकल्पनामात्रं वस्तुस्वप्नविषयोपमं न परमार्थतोऽस्तीति, ये आहुः ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तुकथमप्रमाणात्मदे न विकल्पज्ञानबलेन वस्तुस्वरूपमुत्सृज्य तदेवापलपंतः श्रद्धेयवचनाः स्युः ॥ १४ ॥ कुतश्चैतदन्याय्यं ।

वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥

बहुचित्तावलम्बनीभूतमेकं वस्तुसाधारणं तत् खलु नैकचित्तपरिकल्पितं नाप्यनेकचित्तपरिकल्पयं किन्तु स्वप्रतिष्ठतं कथं वस्तुसाम्ये चित्तभेदात् धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवत्यधर्मापेक्षं तत एव दुःखज्ञानमविद्यापेक्षं तत एव मूढ़ज्ञानं सम्यग्दर्शनापेक्षं, ततएवमाध्यस्थज्ञानमिति, कस्य तच्चित्तेन परिकल्पितं न चान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागोयुक्तः तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्था नानयोः संकरगन्धोप्यस्तीति सांख्यपक्षे पुनर्वस्तु त्रिगुणं चलंचगुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसंवद्ध्यते निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनात्मना हेतुर्भवति केचिदाहुर्ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति । तत्र तयाद्वारासाधारणत्वं धावमानाः पूर्व्वोत्तरेषु क्षणेषु वस्तु रूपमेवापह्नवते ॥ १५ ॥

नचैकचित्ततन्त्रं वस्तुपदप्रमाणकं तदा किं स्यात् ॥ १६ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

एकचित्ततन्त्रं चेद्वस्तुस्यात्तदाचित्तव्यग्रे निरुद्धेवा स्वरूप मेव तेनापरामृष्ट मन्यस्या विषयीभूतमप्रमाणकमगृहीत स्वभा- वकं केनचित्तदानीं किं तत्स्यात् ।

सम्बध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत येचास्यानुप- स्थिताभागास्तेचास्य नस्युरेवं नास्ति पृष्ठमित्युदरमपि न गृह्येत । तस्मात् स्वतन्त्रोर्थः सर्व्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तंते तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

तदुपरागापेक्षित्वाच्चित्तस्यवस्तुज्ञाताज्ञातम् ॥१७॥

अयस्कान्तमणि कल्पाविषयाः । अयः सधर्म्मकं चित्तमभि- सम्बध्योपरं जयन्ति, येन च विषयेणोपरक्तं चित्तं स विषयोज्ञा- तस्ततोन्यः पुनरज्ञातोवस्तु नोज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तं यस्यतु तदेव चित्तं विषयस्तस्य ॥ १७ ॥

सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरि- णामित्वात् ॥ १८ ॥

यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत ततस्तद्विषया श्चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताःस्युः सदाज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशंकाचित्तमेव स्वाभासं विषयाभासञ्च वैशेषिकानां क्षिताब्मवादिनाञ्च भविष्यत्यग्निवत्

न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोपि प्रत्येतव्यं। न चाग्निरत्र दृष्टान्तं, नह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति। प्रकाशश्चायं प्रकाश्यप्रकाशक संयोगे दृष्टः न च स्वरूपमात्रेऽस्ति संयोगः, किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति। शब्दार्थः तद्यथः स्वात्मप्रतिष्ठमाकाशं इत्यप्रतिष्ठमित्यर्थः स्वबुद्धि प्रचारप्रतिसंवेदनात् सत्वानां प्रवृत्तिर्दृश्यते। क्रुद्धोहम्भीतोहममुत्र मे रागोऽमुत्र मे क्रोध इत्येतत् स्वबुद्धेरग्रहणेन युक्तमिति ॥ १९ ॥

## एकसमये चो भयानवधारणम् ॥ २० ॥

न चैकस्मिन् क्षणे स्वपररूपावधारणं युक्तं क्षणिकवादिनो यद्भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत इति।

## चित्तान्तरे दृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृति सङ्करश्च ॥ २१ ॥

अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिः केन गृह्यते साप्यन्यया साप्यन्ययेत्यतिप्रसङ्गःस्मृतिसङ्करश्च यावन्तोबुद्धिबुद्धीनामनुभवास्तावन्त्यः स्मृतयः प्राप्नुवन्ति तत्सङ्कराच्चैक स्मृत्यनवधारणञ्च स्यादित्येवं बुद्धिप्रतिसम्वेदिनं पुरुषमपलपद्भिः वैनाशिकैः सर्व्वमेवाकुलीकृतं ते तु भोक्तृस्वरूपं यत्र क्व च न कल्पयन्तो न न्यायेन सङ्गच्छन्ते। केचित् सत्वमात्रमपि परिकल्प्यास्ति स सत्वो य एतान् पञ्चस्कन्धान्निक्षिप्यान्यांश्च प्रतिसन्दधातीत्युक्त्वा

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

ततएव पुनस्त्रस्यन्ति तथास्कन्धानां महन्निर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्वस्य पुनः सत्वमेवापह्नुवते साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति ॥ २१ ॥

कथं ?—

## चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुतपति तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते । तथाचोक्तं "न पातालं न च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम् गुहायस्यां [निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते इति ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

## द्रष्टृदृश्योपरक्तं चित्तं सर्व्वार्थम् ॥ २३ ॥

मनोहि मन्तव्येनार्थेनोपरक्तं । तत्स्वयञ्च विषयत्वाद्विषयिणा पुरुषेणात्मीयया वृत्त्याभिसम्बन्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्व्वार्थमित्युच्यते । तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः, अपरेचित्तमात्रमेवेदं सर्व्वं नास्ति । खल्वयं गवादिर्घटादिश्च सकारणो लोक इति अनुकम्पनीयास्ते कस्मात् अस्ति हि तेषां भ्रान्तिवीजं सर्व्वरूपाकार निर्भासं चित्तमिति, समा-

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

धिप्रज्ञायां प्रज्ञेयोर्थः प्रतिविम्बो भूतस्तस्यालम्बनीभूतत्वादन्यः सचेदर्थ श्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत तस्मात् प्रतिविम्बीभूतोर्थः प्रज्ञायां येनावधार्य्यते स पुरुष इति एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात्त्रयमप्येतज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतः पुरुषः ॥ २३ ॥ कुतश्चैतत्

## तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥

तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं नस्वार्थं संहत्यकारित्वाद्गृहवत् । संहत्यकारिणा चित्तेन नस्वार्थेन भवितव्यं न सुखचित्तं सुखार्थं न ज्ञान ज्ञानार्थमुभयमप्येतत्परार्थं यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो न परः सामान्यमात्रं यत्तु किञ्चित्परं सामान्यमात्रंस्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात् परार्थमेव स्यात् । यस्त्वसौ परोविशेषः स न संहत्यकारीपुरुष इति ॥ २४ ॥

## विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २५ ॥

यथा प्रावृषि तृणांकुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्ग श्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते तस्यात्मभावभावना स्वाभाविकीप्रवर्त्तते, यस्याभावादिदमुक्तं स्वभावं मुक्त्वादोषात् येषांपूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति। तत्रात्मभावभावना कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं भविष्याम इति, सा तु विशेषदर्शिनो

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

निवर्तते, कुतः चित्तस्यैवैष विचित्रः परिणामः पुरुषस्त्व सत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति, ततोप्यात्मभावभावनाकुशलस्य निवर्तते इति ॥ २५ ॥

तदाविवेकनिम्नं कैवल्यप्राग्भारं* चित्तम्॥२६॥

तदानीं यदस्य चित्तं विषयप्राग्भार † मज्ञाननिम्नमासीत् तदस्यान्यथाभवति कैवल्यप्राग्भारं‡ विवेकजज्ञाननिम्नमिति॥२६॥

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

प्रत्ययविवेकनिम्नस्य सत्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययांतराण्यस्मीति वा ममेति वा जानामीति वा न जानामीति वा कुतः क्षीयमाणबीजेभ्यः पूर्वं संस्कारेभ्यः इति ॥ २७ ॥

हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथाक्लेशा दग्धबीजभावना प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति, ज्ञान संस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते २७

प्रसंख्यानेप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्म्ममेघः समाधिः ॥ २९ ॥

यदायं ब्राह्मणः प्रसंख्यानेप्यकुसीदस्ततोपि न किञ्चित् प्रार्थयते तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति

---

* भावं इत्यपि पाठः। † भाव ‡ भावं

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

संस्कारबीजक्षयान्नास्यप्रत्ययान्तराण्युत्पद्यन्ते तदास्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

ततः क्लेशकर्म्मनिवृत्तिः ॥ ३० ॥

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति कुशलाऽकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति क्लेशकर्म्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति, कस्मात् यस्माद्विपर्य्ययो भवस्यकारणं न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यते इति ॥ ३० ॥

तदा सर्व्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम् ॥ ३१ ॥

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्यानंत्यं भवति । तमसाभिभूतमावृतं ज्ञानसत्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति, तत्र यदा सर्वैरावरणमलैरपगतमलं भवति तदा भवत्यस्यानंत्यं ज्ञानस्यानंत्याज् ज्ञेयमल्पं संपद्यते। यथाकाशे खद्योतः यत्रेदमुक्तं "अन्धोमणिमविध्यत् तमनंगुलिरावयत् अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वो ऽभ्यपूजयत्" इति ॥ ३१ ॥

ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

तस्य धर्म्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते न हि कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

**क्षणप्रतियोगीपरिणामापरान्तनिर्ग्राह्यः क्रमः ॥३३॥**

क्षणानंतर्य्यात्मा परिणामस्यापरांतेनावसानेन गृह्यते क्रमः। नह्यननुभूतक्रमक्षणा पुराणता वस्त्रस्यांते भवति। नित्येषु च क्रमो दृष्टः द्वयी चेयं नित्यता कूटस्थनित्यता परिणामनित्यता च तत्र कूटस्थ नित्यता पुरुषस्य परिणाम नित्यता गुणानां यस्मिन् परिणम्यमाने तत्वं न विहन्यते तन्नित्यं, उभयस्य च तत्वानभिघान्नित्यत्वं तत्र गुणधर्म्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमोलब्धपर्य्यवसानो नित्येषु धर्म्मिषु गुणेष्वलब्धपर्य्यवसानः कूटस्थ नित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति। तत्राप्यलब्ध पर्य्यवसानः, शब्दपृष्ठेनास्ति क्रियामुपादाय कल्पित इति, अथास्य संसारस्य स्थित्या गत्या च गुणेषुवर्तमानस्यास्ति क्रमसमाप्तिर्न वेति, अवचनोयमेतत् कथं अस्ति प्रश्न एकान्तवचनीयः, सर्व्वो जातो मरिष्यति ओ भो इति अथ सर्व्वो मृत्वा जनिष्यत इति विभज्य वच. नीयमेतत् प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्य वचनीयः प्रश्नः, पशूनधिकृत्य श्रेयसीदेवान्टषीं श्चाधिकृत्य नेति अयंत्ववचनीयः संसारो यमन्त वानथानन्त इति, कुशलस्यास्ति संसारक्रमपरिसमाप्तिर्नेतरस्येति अन्यतरावधारणे दोषः तस्माद्व्याकरणीयएवायं प्रश्न इति॥३३॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत्स्वरूपमवधार्य्यते—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

* कुतः भोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्य कारणात्मनां गुणानां तत् कैवल्यस्वरूपप्रतिष्ठा पुनर्बुद्धिसत्वानभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला तस्याः, सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्री पातञ्जले योगशास्त्रे सांख्य प्रवचने
कैवल्यपादश्चतुर्थः संपूर्णः ।

॥ ग्रन्थश्चायं समाप्तः ॥

---

* कृतभोगा इत्यपि पाठः ।

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

## ॥ अथ अशुद्धि शुद्धि पत्रम् ॥

——:o:——

| पृष्टम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ४ | क्रियन्त | क्रियन्ते |
| ३ | २२ | भूताथ | भूतार्थ |
| ८ | ४ | यथावद्ववस्तु | यथावद्वस्तु |
| ८ | ७ | धिमात्रोपायानाम् | धिमात्रोपायइति |
| ८ | २१ | असन्न | आसन्न |
| १० | २३ | प्रतिजानीती | प्रतिजानती |
| १२ | ११ | निस्मारयति | निस्सारयति |
| १२ | १८ | त्यं काग्र | त्यें काग्र |

१४ पृष्ट के आगे त्रुटि है—

### वीतरागविषयं वा चित्तम् ॥ ३७ ॥

वीतरागचित्तालम्वनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभतइति ॥ ३७ ॥

इस से अग्रिम सूत्र का अङ्क ३८ समझो ॥

| पृष्टम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४ | १० | द्विशेष | द्विशेषः |
| १४ | १५ | अस्याः | अस्या |
| १६ | ६ | तत्सथ | तत्स्थ |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| पृष्टम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८ | १२ | प्रसाद | प्रासाद |
| १९ | ३ | जायत | जायते |
| १९ | १० | प्रप्ति | प्राप्ति |
| १९ | २२ | संस्काराश्रयो | संस्काराशयो |
| २० | २० | विशय | विषय |
| २१ | २ | स्वाध्यायो | स्वाध्यायः |
| २१ | १५ | मूत्वा | भूत्वा |
| २२ | १६ | भेदा | भेदः |
| २३ | २३ | पत्तिर | पत्तिरे |
| २६ | २ | प्रसख्यान | प्रसंख्यान |
| २६ | ६ | कर्मकस्य | कर्मैकस्य |
| २८ | १२ | विवर्द्धते | विवर्द्धन्ते |
| २८ | १९ | अनुग्रह्णा | अनुगृह्णा |
| २९ | २१ | सांसरो | संसारो |
| ३१ | १३ | न्द्रियात्मकं | न्द्रियात्मकं |
| ३१ | १८ | ह्वियो | द्वयो |
| ३१ | २१ | दानि | दर्शन |
| ३२ | ४ | सद्भावा | सद्भावाः |
| ३२ | ८ | तंमात्राणामविषेणांविशषाः | तन्मात्राणाम- |
| ,, | ,, | | विशेषाणांविशेषाः |
| ३४ | १ | प्रत्ययभासते | प्रत्यवभासते |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| पृष्टम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३५ | ३ | दर्शनन | दर्शन |
| ३५ | ८ | स्वचितेन | स्वचित्तेन |
| ३६ | १६ | दशन | दर्शन |
| ४० | ४ | विदत | विदिन |
| ४० | ११ | शोताष्णे | शीतोष्णे |
| ४० | १४ | व्रजनवा | व्रजन्वा |
| ४१ | २ | सुष्य: | सुल्य: |
| ४२ | २१ | सद्ध्य: | सिद्धय: |
| ४३ | १३ | कायेन्द्रयि | कायेन्द्रिय |
| ४४ | १० | न्नभिभूयते | न्नाभिभूयते |
| ४७ | ५ | वाध्यं | वोध्यं |
| ४७ | ६ | समाधि: । रिति | समाधिरिति |
| ४७ | ६ | सामाध्यो | समाध्यो |
| ४७ | ११ | ध्याया | धेग्रया |
| ४८ | ३ | यमोसंयुक्त: | यमोयुक्त: |
| ४९ | ९ | धंमित्लना | धम्मिल्लेना |
| ५० | १७ | तिष्ठत | तिष्ठते |
| ५१ | २३ | मता | माता |
| ५३ | १० | निमित्तोय | निमित्तोप |
| ५५ | १० | शक्तिरिद्वता | शक्तिपरिद्वता |
| ५५ | १५ | प्रतिपियादविषया | प्रतिपिपादयिषया |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

| पृष्टम् | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ५८ | २ | जानत्य | ज्ञानात्य |
| ६० | २२ | द्विसाहस्त्र | द्विसाहस्त्रा |
| ६४ | २० | प्रत्यानीक | प्रत्यनीक |
| ६६ | ५ | द्विभूत्व | द्विभुत्व |
| ६६ | १७ | र्भंनसो | र्मंनसो |
| ६७ | ६ | शब्दादियो | शब्दादयो |
| ६७ | १३ | समूसस्य | समूहस्य |
| ६८ | ७ | भवति | भवन्ति |
| ६८ | १५ | एतांन्यष्ट | एतान्यष्टा |
| ६९ | ५ | प्रकाशन्मतो | प्रकाशात्मनो |
| ७० | २२ | त्ततय: | त्ततीय: |
| ७१ | ३ | व्रह्मण | ब्राह्मण |
| ७१ | १९ | विष्यति | विष्यति |
| ७२ | ६ | विदा: | विद: |
| ७४ | ३ | ज्ञानाद्दर्शनं | ज्ञानाददर्शनं |
| ७५ | ६ | प्रियत्न | प्रयत्न |
| ७९ | ९ | मध्वानाम् | मध्वनाम् |
| ८२ | ५ | तद्यथ: | तद्यथा |
| ८२ | १४ | चित्तान्ततरे | चित्तान्तारे |
| ८८ | ३ | भसम्बन्धात् | भिसम्बधात् |

CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitzed by eGangotri

